अपी'त्याग्नेये। 'न वर्तते यत्र रजस्तमस्तयोः सत्वं चे'त्याद्युक्तम् ॥६२॥ तत्वसारकथनं द्वाविमौ पुरुषावित्यत्रैवोपसंहृतम्। तत्त्वप्रशंसार्थमेव तद्बुद्धिप्रशंसा कृता। अत्र तु साधनसारोपसंहारः सर्वगुह्यतममिति। मन्मना इत्यादेः पूर्वमेवोक्तत्वाद्भूय इति। अर्थतस्त्वत्रापि विष्ण्वाधिक्यमेवोक्तं भवति ॥ ६४ ॥ अन्यसर्वधर्मान्परित्यज्येत्युक्तशेषत्वेन सर्वधर्मानितिवचनम्। मामेकं शरणं व्रजेत्यपि। मन्मना इत्याद्युक्तनिगमनात्मना तद्व्याख्यानम्। 'सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदा। सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणम्। अखण्डा त्रिविधा पूजा तद्दत्यैव स्वभावतः। रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः। शरणागतिरेषा स्याद्विष्णौ मोक्षफलप्रदे'ति महाविष्णुपुराणे। अनादिजन्मकृतसर्वपापेभ्यः। अत्र प्राप्त्यभावात्। धर्मपरित्यागे पापपरित्यागस्य कैमुत्येनैव सिद्धत्वात् ॥ ६६ ॥ अतपस्कायैव न वाच्यम्। अशुश्रूषवे पुनश्चेति दोषाधिक्यमशुश्रूषोर्दर्शयितुं चशब्दः। एवमभक्ताय कदापि न वाच्यम्। कदाचिदल्पतपसोऽल्पशुश्रूषोरपि भक्त्याधिक्ये वाच्यं भवतीति कदाचनेतिशेषः। अभक्ताच्च न वाच्यमद्वयोरिति तत्रापि चशब्दः 'समुच्चये तथाधिक्ये न्यूनत्वे चः प्रयुज्यत' इति शब्दनिर्णये। 'अभक्तादपि पापः स्यादसूयुर्दोषदृग्यत' इति च पाद्मे ॥ ६७ ॥ सोऽपि मुक्तः। न च तस्मान्मनुष्येष्वित्युक्तेश्च मुक्तानां महत्तारतम्यं ज्ञायते। मनुष्येष्विति विशेषणात्तत्रापि देवानामाधिक्यं च। 'मुक्तिर्ज्ञात्वाऽपि विष्णुं स्याच्छास्त्रं श्रुत्वा ततोऽधिकम्। मुक्तौ सुखं तत्पठतस्ततोऽप्यधिकमिष्यते। व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचित्। ततोऽधिकं तु देवानां मुख्यव्याख्याकृतो यत' इति च ॥ ॥ ६७-७१ ॥ यथेच्छसि तथा कुर्वित्याक्षेपपरिहाराय करिष्ये वचनं तवेत्यनुसरति भगवन्तम् ॥ ७३ ॥ ६ ॥ नमस्ते वासुदेवाय प्रेयसां मे प्रियोत्तम। समस्तगुणसम्पूर्ण निर्दोषानन्ददायिने ॥ यस्य त्रीण्यु-

दितानि वेदवचने रूपाणि दिव्यान्यलं यद्तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् । वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुर्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥ निःशेषदोषरहित कल्याणाशेषसद्गुण । भूतिस्वयम्भुशर्वादिवन्द्यं त्वां नौमि मे प्रियम्॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णयेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ ॥ ॥ ॥

॥ श्रीमद्भगवद्गीतातात्पर्यनिर्णयः समाप्तः ॥

